# नारदबैड्व्यारव्या

शंखञ्चक्रं पुस्तकं ज्ञानमुद्रां पाणयं भोजैर्धारयन्तं
हयास्यम्
नत्वा श्रीशं नारदोक्तस्य बैटो दुर्ज्ञेयार्त्थानत्र
विज्ञापयामि १
अनृवर्णप्लुत लृकारागणयन्ते चः क्रमादिह
ते ये कटादौ योगार्णानोवर्ज्य इति निर्णितः २

सहनेन स्थिता चानुवाकोऽत्रैवं हि गणयते
नान्यवर्णयुजा वाक्यमनुवाको युगादिना ३

योगे द्वितीयो यस्तेन तत्परा चापि वाक्यकम्
न सवर्णस्सवर्गीयो भवेद्योगोऽपि तत्र सः ४

मो दो गो तस्सबिन्दुस्स स्युर्दशोत्तरवृद्धयः ५

एषा नारदबैटः परिभाषा धीमतां च दुर्ज्ञेया
श्रीरामसूनुना सा विहिता बैडर्त्थबोधाय ६

सुखबोधाय बालानामर्थौ यं पारिभाषिकः
स्पष्टी करिष्यते भूयश्चक्रनाम्ना मयाधुना ७

अनृवर्णप्लुतेति । इहास्मिन्नारदबैटिम् ।
अनृवर्णप्लुतलृकाराः । ऋवर्णश्च प्लुताश्च लृकारश्च
ऋवर्णप्लुतलृकाराः । एते येषु न विद्यन्ते ते
अनृवर्णप्लुतलृकाराः । अवर्णप्लुत इवर्णप्लुत
उवर्णप्लुत ऋकार ॠकार लृकार व्यतिरिक्ता
इत्यर्थः । तथा भूता अचः अकारादयस्वराः
क्रमात् गणयन्ते । आदितः अकारमारभ्य
औकारपर्यन्तान्यक्षराणि । एकम् । द्वे । त्रीणि ।
चत्वारि । पञ्च । इत्यादिक्रमेण संख्यायंत इत्यर्थः
। ये योगार्णाः संयोगवर्णाः । अर्णवर्णावुभौ
लिप्यामिति केशवः । तथा चोक्तमभियुक्तैः ।
गायत्र्यर्णारचक्रे प्रथममनुसखस्मेरपत्रारविन्द इति
। संयोगभूतव्यञ्जनानीत्यर्थः । ते संयोगवर्णाः
कटादौ कटपयादौ भवन्ति । कटपयादि संख्या
क्रमेणैव गणनीयाभवेयुरित्यर्थः । नोनकारः वर्ज्यः
अभावार्थकः । शून्यत्वेन ज्ञेय इत्यर्थः । इति

निर्णितः एवं पारिभाषिकोऽर्त्थस्संग्रहेण निश्चित इत्यर्त्थः ८

एवं संग्रहोक्तमेवार्त्थं पुनः प्रपञ्चयति सहेत्यादिना ९

सहेति । अत्रास्मिन् बैटि । नः कनकारः तेननेन । नकारेणेत्यर्त्थः । नेनसहनकारेण सार्त्थम् । स्थितश्चासावच्च स्थिता च् । वर्त्तमानस्वरः तेन स्थिता चावर्त्तमानस्वरेण । नकारो परिस्थितस्वरेणेत्यर्त्थः । अनुवाको गण्यते । इषे त्वा यज्ञस्य शुन्धद्ध्वं कर्म्मणे देव इत्येवमादयोऽनुवाका गण्यन्त इत्यर्त्थः । नान्यवर्णयुजा । नात् नकारात् अन्यः नान्यः । नान्यश्चासौ वर्णश्च नान्यवर्णः । न कारादन्यवर्ण इत्यर्त्थः । नकारव्यतिरिक्तव्यञ्जनमिति यावत् । तेन युक्संयुक्तः नान्यवर्णवर्णयुक् । तेन नान्यवर्णयुजा । अचास्वरेण । नकारादन्यवर्णोपलक्षितेन स्वरेणेत्यर्त्थः । वाक्यं गण्यते । उभाराधसस्सहमादयद्ध्यै । सा तयेहुवे

वाम् । उतवाघास्यालात् । जनयामि नव्यम् । इत्यादितत्तदनुवाकमद्ध्यस्थवाक्यान्ता गणयन्त इत्यर्थः । युगादिना । अत्र व्यञ्जनद्वयसंयोगो युगमित्युच्यते । तस्यादिः युगादिः तेन युगादिना । संयोगादिमवर्णेनेत्यर्थः । तेन युगादिना अनुवाकं गणयते । इन्द्राग्नी ओमासो मरुत्वन्तमिन्द्रमरुत्वो मरुत्वान्महान्महान्नृवदित्येवमादयोऽनुवाका गणयन्त इत्यर्थः १०

योग इति । योगे संयुक्तव्यञ्जनद्वये यः द्वितीयः द्वितीयव्यञ्जनं भवति तेन द्वितीयवर्णेन तत्पराचापि । तत्परः । तस्मात् द्वितीयव्यञ्जनात्परः तत्परः । तत्परश्चासावच्चतत्पराच् तेन तत्पराचा । तत्परस्वरेणापीत्यर्थः । वाक्यमेव वाक्यकम् । गणयते । अत्रायमर्थः । संयोगद्वितीयव्यञ्जनेन च तस्योत्तरस्वरेणापि अनुवाकमद्ध्यस्थवाक्यान्ता एवगणयन्त इत्यर्थः । किञ्च । अत्र संयोगभूतव्यञ्जनद्वयस्यासवर्णत्वमसवर्गीयत्वं च विवक्षितमित्याह ११

न सवर्ण इति । तत्रापि संयोगवर्णोऽपि द्वयेऽपि । परस्वरं सवर्णसवर्गीयत्वञ्च नभवेत् तस्मात् सः योगः व्यञ्जनद्वयसंयोगः सवर्णश्च सवर्गीयश्च न भवेत् । १२

मोदोगोतस्सबिन्दुरिति । मो मकारः । दो दकारः । गो गकारः । तः तकारः । सः सकारः । इत्येते वर्णास्सबिन्दुकास्सन्तः दशोत्तरवृद्धय स्युः । अत्र मकारादि क्रमेण उत्तरोत्तरं दश संख्याकत्वेन वद्धितवन्त इत्यर्थः । अत्र दशस्थानेमं । विंशत्स्थानेदं । त्रिंशत्स्थाने गं । चत्वारिंशत्स्थाने तं । पञ्चाशत्स्थाने सं । एवं क्रमेण सबिन्दुका भवेयुरित्यर्थः १३

अयं नारदबैडर्थो दुर्ग्रहो धीमतामपि । एवं स्पष्टीकृतस्तेन चक्रेण विदुषाम्मुदे १४

इति नारदबैट्परिभाषा व्याख्यानं समाप्तम्

भावप्रकाशिकाख्यानं कृतबैटो मुनेरिदम्
व्याख्यानन्तेन चक्रेण कृतं
श्रीरामसूनना भावप्रकाशिका समाप्ता

ओम् । इषे त्वा । नूथनावैनववेदे ।
नावीनावनखिनीवेगू । निवीनखूणिनीवहीसु
। वनारीभ्राजनभानवानच्छ्रावेङ्गानिङ्गावक
निवापभ्रावैमारोदी । नादं न देदुनिदगू ।
विभुबाहूभावैनुगे । नूरोमुखामीनखैदो ।
नाभैभीमुयुनीभारिभावुणकनीभूगी ।
प्रथमकाण्डस्समाप्तः

वायव्यं
नौगू । निखनेतै । नोवीनिगू । नीम्नजुमुनुदे ।
नौ नदु । नौ गैगि । द्वितीयकाण्डस्समाप्तः

प्रजापतिरकामयत
निदूनखनभाषेमसे १ न वीविषमूभाषीदन्नामो
२ नावैनीममं मागू ३ नरेनावनविनाभीगो ।

वैनभामिमं वोनिरित । तृतीयकाण्डस्समाप्तः

युञ्जानः प्रथमम्

मैगुदीदिदिममोगोमेदेग । दिददोदन्तं गोदीमेगोदादा । निमनविषनिदोभुसी । नारासोने दै । गं नैदिमा । गिगिदैदोगं गोदुदद ॥ भानौ मूदूमोगू ॥ चतुर्थकाण्डस्समाप्तः

सावित्राणि जुहोति

नौद १ नौमम २ तृतीयचतुर्थयोः प्रश्नयो लक्ष्यानि न भवन्ति ४ नूभानाभानेने ५ दूनौ नैन ६ नमेभीवैनलूमोवीवीनेने ७

प्राचीनवंशम्

न च प्रथमद्वितीयतृतीयचतुर्थपञ्चमप्रश्नेषु लक्ष्यानि भवन्ति ५ नूथनी ६

प्रजननं ज्योतिः

नुवनीभानूवना १ न द्वितीये लक्ष्याणि भवन्ति

२ नौमुनभुने ३ ने ने भुनवैमगारोना ४ नूथनैवाभानूभान ५ इति सप्तमकाण्डं समाप्तम्

श्रीभक्तवत्सलपरब्रह्मणे नमः

Reference:
Nārada Baiḍ Vyākhyā, pages 257-261 in the Ātreya Śikṣā bundle, (cod. Palmbl. III 8/133) in the collection of the Hamburg Staats-Universitaet Bibliothek, Grantha script on palm leaves, 3 folios.